# कालनिर्णयशिक्षा

प्रातिशाख्यादिशास्त्राणि मया वीक्ष्य यथामति
वेदतत्त्वावबोधार्थमिह कालो निरूप्यते

अखण्डवर्णविषयो वर्णांशविषयोऽपि च
विरामविषयश्चेति त्रिविधः काल उच्यते
स्वरवर्णविरामाणां भिन्नवाग्वृत्तिवर्तिनाम्
ऐकरूप्येण कालस्य कथनं नोपपद्यते
मध्यमां वृत्तिमाश्रित्य मया चेयं कृतिः कृता
प्रातिशाख्ये निषिध्यान्ये यस्मात्सैकैव बोध्यते
व्यञ्जनस्वरभक्तीनां कालः स्यादर्धमात्रिकः
ऋकारऌकारयोर्मध्ये तथा रेफलकारयोः
एकारौकारयोरादावकारोऽप्यर्धमात्रिकः
इवर्णोवर्णयोश्शेषौ स्यातामध्यर्धमात्रिकौ
व्यक्तावेकपदे वर्णावन्तरे स्थितसन्धितः
परोऽप्योष्ठ्यस्वरान्तश्च संयोगादिर्यदिस्थितः

अनुस्वारो द्विरुक्तोऽन्त्यपञ्चमश्च द्विमात्रिकः
ह्रस्वात्परः प्लुताद्दीर्घात्केवलादेकमात्रिकः
व्यक्तिमध्यस्थनासिक्यः सपादो मात्रिकः स्मृतः
व्यक्तिरेषादितत्काला भवेदिति विनिश्चितम्
ऋकारपूर्वः प्रथमो हल्परस्त्वेकमात्रिकः
ऋकारात्प्रथमस्यापि द्वित्वं न स्यात्कदा चन
अवसाने लकारस्य त्रिपादत्वं सदा भवेत्
चतुर्थसप्तमाद्यानां स्वराणामेकमात्रता
ऐकारौकारयोरादावकारोऽप्येकमात्रिकः
इवर्णोवर्णयोः शेषौ भवेतामर्धमात्रिकौ
पदान्तविषयव्यक्तेः पवर्गप्रणवावपि
अन्तरानेकरूपस्य वाक्यस्यान्तस्तथेङ्ग्ययोः

अवग्रहाणामन्ते चाप्यृकारल्कारयोरपि
वाक्यप्रतीकयजुषामपदेऽध्यर्धमात्रता
एतेषां तु पदाध्याये विरामः स्यदि्द्वमात्रिकः
एकादशस्वरे तद्वदि्द्वतीयाष्टमपञ्चमे
सन्ध्यक्षराणां वेदं च प्रणवं चान्तरा तथा
पदान्ते च तथा कम्पा अन्ततो निहताणुकाः
शेषस्योदात्तता वा स्यात्स्वारता च व्यवस्थया
तृतीयषष्ठनवमस्वरेष्वन्तेप्यृगर्धयोः
त्रिमात्रत्वं प्रयोगे तु त्रिषु सन्ध्यक्षरेष्वपि
स्वाध्यायारम्भशेषस्य प्रणवस्य स्वरस्य च
अध्यायस्यानुवाकस्यान्ते स्यादर्धतृतीयता
ऋृगन्तस्य च सन्धानेऽवसाने मात्रिको विदुः
समकाले तु वेदस्थप्रणवस्य द्विमात्रता
स्वरमात्रद्विमात्रत्वं व्यञ्जनं त्वणुमात्रकम्
तस्तरीकरणादौ तु स्वरमात्रस्य दीर्घता
ध्यानार्थस्यावसाने तु भवेन्नादोऽर्धमात्रकः
दीर्घप्लुता यदा राङ्गाः स्युस्तदेतेष्वयं विधिः
एकार्धमात्रशेषाः स्युर्हृदये मूर्ध्नि नासिके
पञ्चरङ्गप्लुता दीर्घाश्चत्वारस्तैत्तिरीयकाः
ऊष्मरेफस्वरेभ्यः प्रागनुस्वारोऽस्ति नान्यथा
काण्डप्रश्नानुवाकानां समाप्तौ काल इष्यते
दशाष्टपञ्चमात्राः स्युस्तन्त्राणां तु त्र्यहं भवेत्
विश्रमो न समासस्य मध्ये कार्यः पदस्य वा
नित्यं प्राक्पदसंबन्धं चादिं प्राक्पदमन्तरा
परेण नित्यसंबन्धं प्रादिं परपदं तथा
एकस्वराणां चादीनां प्रादीनामिति तद्द्वयम्
यो यो विरामकालः प्रागृगादौ समुदीरितः
अङ्गीकृतस्यार्धमात्रं तु न सोऽधिक इष्यते

इति कालनिर्णयशिक्षा सम्पूर्णा